# ॥ श्रीकृष्णद्वादशनामस्तोत्रम् ॥

श्री गणेशाय नमः ।
श्रीकृष्ण उवाच ।
किं ते नामसहस्रेण विज्ञातेन तवाऽर्जुन ।
तानि नामानि विज्ञाय नरः पापैः प्रमुच्यते ॥ १॥

प्रथमं तु हरिं विन्द्याद् द्वितीयं केशवं तथा ।
तृतीयं पद्मनाभं च चतुर्थं वामनं स्मरेत् ॥ २॥

पञ्चमं वेदगर्भं तु षष्ठं च मधुसूदनम् ।
सप्तमं वासुदेवं च वराहं चाऽष्टमं तथा ॥ ३॥

नवमं पुण्डरीकाक्षं दशमं तु जनार्दनम् ।
कृष्णमेकादशं विन्द्याद् द्वादशं श्रीधरं तथा ॥ ४॥

एतानि द्वादश नामानि विष्णुप्रोक्ते विधीयते ।
सायं-प्रातः पठेन्नित्यं तस्य पुण्यफलं शृणु ॥ ५॥

चान्द्रायण-सहस्राणि कन्यादानशतानि च ।
अश्वमेधसहस्राणि फलं प्राप्नोत्यसंशयः ॥ ६॥

अमायां पौर्णमास्यां च द्वादश्यां तु विशेषतः ।
प्रातःकाले पठेन्नित्यं सर्वपापैः प्रमुच्यते ॥ ७॥

॥ इति श्रीमन्महाभारतेऽरण्यपर्वणि कृष्णद्वादशनामस्तोत्रं सम्पूर्णम् ॥